'न श्रद्धेयं ततस्तेषां दर्शनं वै पुनःपुनः ॥ २०
इति मत्वाऽब्रवीद्वाक्यं जरिता पुत्रगृद्धिनी ।'
एकैकशश्च पुत्रांस्तान्क्रोशमानानवैक्षत ॥ २१
'जरिता तु परिष्वज्य पुत्रस्नेहाच्चुचुम्ब ह ॥' २२
ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दंस्तदा सुताः ॥२३
'गुरुत्वान्मन्दपालस्य तपसश्च विशेषतः ।
अभिवादामहे सर्वे जातपक्षाः प्रसादतः ॥ २४
एवमुक्तवतां तेषां प्रतिनन्द्य महातपाः ।
परिष्वज्य ततो मूर्ध्नि उपाघ्राय च बालकान् ।
पुत्रान्स्वयं समाहूय प्रीतः प्रोवाच गौतमः ॥' २५
लालप्यमानमेकैकं जरितां च पुनःपुनः ।
न चैवोचुस्तदा किंचित्तमृषिं साध्वसाधु वा ॥२६
मन्दपाल उवाच ।
ज्येष्ठः सुतस्ते कतमः कतमस्तस्य चानुजः ।
मध्यमः कतमश्चैव कनीयान्कतमश्च ते ॥ २७
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानस्मि हव्याशे नैव शान्तिमितो लभे ।
'एवमुक्त्वा तु तां पत्नीं मन्दपालस्तदाऽस्पृशत् ॥'
जरितोवाच ।
किं नु ज्येष्ठेन ते कार्यं किमनन्तरजेन ते ।
किं वा मध्यमजातेन किं कनिष्ठेन वा पुनः ॥ २९
यां त्वं मां सर्वतो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥ ३०
मन्दपाल उवाच ।
न स्त्रीणां विद्यते किंचिदमुत्र पुरुषान्तरात् ।
सापत्नकमृते लोके नान्यदर्थविनाशनम् ॥ ३१
वैराग्निदीपनं चैव भृशमुद्वेगकारि च ।
सुव्रता चापि कल्याणी सर्वभूतेषु विश्रुता ॥ ३२
अरुन्धती महात्मानं वसिष्ठं पर्यशङ्कत ।
विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ॥ ३३
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ।
अपध्यानेन सा तेन धूमारुणसमप्रभा ।
लक्ष्याऽलक्ष्या नाभिरूपा निमित्तमिव पश्यति ३४
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह ।
इष्टमेवं गते हि त्वं सा तथैवाद्य वर्तते ॥ ३५
न हि भार्येति विश्वासः कार्यः पुंसा कथंचन ।
न हि कार्यमनुध्याति नारी पुत्रवती सती ॥३६
वैशंपायन उवाच ।
ततस्ते सर्व एवैनं पुत्राः सम्यगुपासते ।
स च तानात्मजान्सर्वानाश्वासयितुमुद्यतः ॥ ३७

॥ इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि ऊनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

## षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

मन्दपालस्य पुत्राश्वासनपूर्वकं सर्वैः सहान्यत्र गमनम् ॥ १ ॥ देवगणैः सहागतस्येन्द्रस्य कृष्णार्जुनवरदानपूर्वकं स्वलोकगमनम् ॥ २ ॥ अग्नेः स्वस्थानगमनानन्तरं कृष्णार्जुनमयानां नदीकूल उपवेशनम् ॥ ३ ॥

मन्दपाल उवाच ।
युष्माकमपवर्गार्थं विज्ञप्तो ज्वलनो मया ।
अग्निना च तथेत्येवं प्रतिज्ञातं महात्मना ॥ १
अग्नेर्वचनमाज्ञाय मातुर्धर्मज्ञतां च वः ।
भवतां च परं वीर्यं पूर्वं नाहमिहागतः ॥ २
न सन्तापो हि वः कार्यः पुत्रका हृदि मां प्रति ।
ऋषीन्वेद हुताशोऽपि ब्रह्म तद्विदितं च वः ॥३
वैशंपायन उवाच ।
एवमाश्वासितान्पुत्रान्भार्यामादाय स द्विजः ।
मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ ४
भगवानपि तिग्मांशुः समिद्धः खाण्डवं ततः ।
ददाह सह कृष्णाभ्यां जनयञ्जगतो हितम् ॥ ५
वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः ।
जगाम परमां तृप्तिं दर्शयामास चार्जुनम् ॥ ६

ततोऽन्तरिक्षाद्भगवानवतीर्य पुरन्दरः ।
मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत् ॥ ७
कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम् ।
वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह ॥ ८
पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।
प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः ॥ ९
यदा प्रसन्नो भगवान्महादेवो भविष्यति ।
तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्वशः ॥ १०
अहमेव च तं कालं वेत्स्यामि कुरुनन्दन ।
तपसा महता चापि दास्यामि भवतोऽप्यहम् ॥ ११
आग्नेयानि च सर्वाणि वायव्यानि च सर्वशः ।
मदीयानि च सर्वाणि ग्रहीष्यसि धनञ्जय ॥ १२
वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम् ।
ददौ सुरपतिश्चैव वरं कृष्णाय धीमते ॥ १३
एवं दत्त्वा वरं ताभ्यां सह देवैर्मरुत्पतिः ।
हुताशनमनुज्ञाप्य जगाम त्रिदिवं प्रभुः ॥ १४
पावकश्च तदा दावं दग्ध्वा समृगपक्षिणम् ।
अहोभिरेकविंशद्भिर्विरराम सुतर्पितः ॥ १
जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च
युक्तः परमया प्रीत्या तावुवाचाच्युतार्जुनौ ॥ १६
युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् ।
अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् ॥ १७
'गाण्डिवं च धनुर्दिव्यमक्षय्यौ च महेषुधी ।
कपिध्वजो रथश्चायं तव दत्तो महामते ॥ १८
अनेन धनुषा चैव रथेनानेन भारत ।
विजेष्यसि रणे शत्रून्सदेवासुरमानुषान् ॥' १९
एवं तौ समनुज्ञातौ पावकेन महात्मना ।
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ २०
परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहिताः समुपाविशन् ॥ २१

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्वणि मयदर्शनपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

॥ समाप्तं मयदर्शनपर्वादिपर्व च ॥

---

इतः परं सभापर्व भविष्यति तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
अर्जुनो जयतां श्रेष्ठो मोचयित्वा मयं तदा ।
किं चकार महातेजास्तन्मे ब्रूहि द्विजोत्तम ॥ १

---

अहानि पञ्च चैकं च इति ख. पाठ. ॥ १५ ॥

षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

इदमादिपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२८ सन १९०६.